


२४

# अन्तरङ्गसाधनम्

## प्रस्तावना

मोक्षः एव जनिमतां प्राणिनां लक्ष्यम्। स च मोक्षः जीवब्रह्मणोः ऐक्यविज्ञानेन भवति। अद्वैतं ब्रह्मैव जीवरूपेण परिच्छिन्नतया प्रतिभाति। ब्रह्म हि नित्यशुद्धबुद्धमुक्तस्वरूपम्। एतादृशस्य ब्रह्मणः ज्ञानं न मलिनान्तकरणवता शक्यसम्भवम्। ब्रह्मैव आत्मा। अतः ब्रह्मज्ञानं वै आत्मस्वरूपज्ञानम्। आत्मस्वरूपज्ञानाय मनः एकाग्रं निर्मलं शान्तं शुद्धं च भवेत्। मनसः निर्मलत्वादिसाधनाय बहूनि साधनानि अद्वैतवेदान्ते उपदिष्टानि। तेषु कानिचित् बहिरङ्गसाधनानि, कानिचन अन्तरङ्गसाधनानि इति उच्यन्ते। बहिरङ्गसाधनानि वै कर्मयोग–ध्यानयोगादीनि साधनानि, उपासनानि च। तानि बहिरङ्गसाधनानि उपासनादीनि अद्वैततत्त्वज्ञानाय परम्परया कारणानि। न तानि साक्षात्साधनानि। यानि च अद्वैततत्त्वसाक्षात्काराय साक्षात्साधनानि तानि एव सहकारिसाधनानि इत्युच्यन्ते। सहकारिसाधनं वै साधनचतुष्टयम्। विवेकः, वैराग्यम्, शमादिषट्कम्, मुमुक्षुत्वं चेति चत्वारि साधनानि साधनचतुष्टयम् इति नाम्ना प्रथितानि। एभिः युक्तः एव साधकः वेदान्तवाक्यानां श्रवणादिकं कृत्वा तत्फलम् प्राप्नोति। अत्र पाठे साधनचतुष्टयं यथाशास्त्रं वर्ण्यते।



## उद्देश्यानि

अमुम् पाठम् पठित्वा भवान् –

- अद्वैतवेदान्तमते मोक्षस्य सहकारिसाधनानि कानि इति ज्ञातुम् प्रभवेत् ।
- ब्रह्मविद्यायाम् अधिकारी कः इति ज्ञातुम् प्रभवेत् ।
- साधनचतुष्टयं किम् इति ज्ञातुं शक्नुयात् ।
- श्रवण-मनन-निदिध्यासनानि ब्रह्मज्ञाने कथम् उपकुर्वन्ति इति ज्ञातुं शक्नुयात् ।
- साधनचतुष्टयसम्पन्नस्य नचिकेतसः कथां ज्ञातुं शक्नुयात् ।
- तात्पर्यग्राहकलिङ्गानि ज्ञातुं शक्नुयात्।
- तात्पर्यं वै किमिति ज्ञातुं शक्नुयात्।

## २४.१ मोक्षस्य सहकारिसाधनम्

मोक्षस्य परम्परासाधनैः कर्मयोगादिभिः चित्तशुद्धिः भवति। यस्य चित्तशुद्धिः अस्ति तस्यैव साधनचतुष्टयाख्यं मोक्षस्य सहकारिसाधनं सिद्ध्यति। तस्मात् ब्रह्मविद्यायाम् अधिकारं प्राप्तुकामेन जनेन



मोक्षस्य परम्परासाधनानां कर्मयोगादीनाम् अनुष्ठानम् प्रथमं कर्तव्यम् भवति। परम्परासाधनैः (बहिरङ्गसाधनैः) यदा क्रमशः अन्तःकरणं शुद्ध्यति तदा साधकेन साधनचतुष्टयस्य अभ्यासः करणीयः।

मोक्षस्य सहकारिसाधनम् इत्यनेन मोक्षम् प्रति साक्षात्साधनस्य ब्रह्मज्ञानस्य उत्पत्तौ यत् सहकारिसाधनम् तत् एव बोद्धव्यम्। वेदान्तशास्त्रे सर्वत्र साधनचतुष्टयम् इति नाम्ना मोक्षस्य सहकारिसाधनम् प्रसिद्धम्। साधनचतुष्टयम् इत्येनन चत्वारि साधनानि प्रसिद्धानि। नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमादिषट्कसम्पत्तिः, मुमुक्षुत्वं चेति चत्वारि साधनानि साधनचतुष्टयम् इति नाम्ना वेदान्तशास्त्रे निगद्यन्ते।

साधनचतुष्टयं किमिति वेदान्तसारग्रन्थे सदानन्दयोगीन्द्रेण उच्यते -

"साधनानि नित्यानित्यवस्तुविवेक-इहामुत्रफलभोगविराग-शमादिषट्कसम्पत्ति-मुमुक्षुत्त्वानि"इति।

अर्थात् १. नित्यानित्यवस्तुविवेकः, २. इहामुत्रफलभोगविरागः, ३. शमादिषट्कसम्पत्तिः, ४. मुमुक्षुत्वं च चत्वारि साधनानि। इदानीम् एतेषां क्रमशः विवरणम् अधः क्रियते -

## २४.२ नित्यानित्यवस्तुविवेकः

चतुर्षु साधनेषु आदिमं साधनं तावत् नित्यानित्यवस्तुविवेकः। नित्यम् अनित्यं च वस्तु इति नित्यानित्यवस्तुनी, तयोः नित्यानित्यवस्तुनोः विवेकः नित्यानित्यवस्तुविवेकः। नित्यं वस्तु अनित्यं च वस्तु इति द्विविधं वस्तु विद्यते जगति। तयोः विवेकः विवेचनम्, किं नित्यं वस्तु किं च अनित्यं वस्तु इति विचारपूर्वकज्ञानम् एव नित्यानित्यवस्तुविवेकः। वेदान्तसारकारमते - "नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्" इति। ब्रह्म एव नित्यं वस्तु ततः अन्यत् अखिलं सर्वम् आकाशादिप्रपञ्चः अनित्यं वस्तु इति विचारपूर्वकं ज्ञानम्। नित्यं वस्तु किं भवति? यत् त्रिषु कालेषु अपि तिष्ठति तत् नित्यं वस्तु। अतीते काले अपि आसीत्, वर्तमानकाले अपि अस्ति, भविष्यत्काले अपि भविष्यति यत् तत् नित्यं वस्तु। तादृशम् एकं ब्रह्म एव विद्यते। ब्रह्म नित्यं वस्तु इत्यत्र प्रमाणम् - "नित्यं विभुं सर्वगतं सुसूक्ष्मम्" (मुण्डकोपनिषदि १/१/६) "आकाशवत् सर्वगतश्च नित्यः", "अजो नित्यः शाश्वतः" (कठोपनिषदि १/२/१८), "सत्यं ज्ञानम् अनन्तं ब्रह्म" (तैत्तिरीये २/१) इत्यादयः श्रुतयः। ब्रह्मभिन्नम् अन्यत् सर्वम् अपि अनित्यम्। तानि पूर्वं नासन्, इदानीं सन्ति, भविष्यत्काले अपि न स्थास्यन्ति। अतः तानि कालत्रये न तिष्ठन्ति। अतः तानि अनित्यवस्तूनि। ब्रह्मभिन्नानां सर्वेषाम् अनित्यत्वविषये "नेह नानास्ति किञ्चन" (४/४/१९) "अथ यदल्पं तन्मर्त्यम्" (छान्दोग्ये ७/२४/१) इत्यादिश्रुतयः प्रमाणभूताः। नित्यवस्तुनः अनित्यवस्तुनः पृथक्करणम् एव नित्यानित्यवस्तुविवेकः। विवेकचूडामणौ अपि उक्तम् -

**"ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः।**
**सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः।।"इति।**

"ब्रह्म सत्यं जगत् मिथ्या" - इत्येवंरूपः यः विनिश्चयः निर्धारणः, सः अयं नित्यानित्यवस्तुविवेकः समुदाहृतः कथितः उक्तः इत्यर्थः।

ननु नित्यानित्यवस्तुविवेकेन किम् सिद्ध्यति इति चेत् अस्माकं प्रकृतं यत् शुद्धबुद्धमुक्तस्वरूपं तद्धि नित्यम्। तेन स्वस्वरूपभूते नित्ये वस्तुनि एव प्रीतिः उत्पद्यते। अयं नित्यानित्यवस्तुविचारः वस्तुतः वेदान्तवाक्यानां श्रवणेन सिद्ध्यति। न केवलं नित्ये वस्तुनि प्रीतिः, अपि तु वेदान्तवाक्यविचारेण अनित्ये वस्तुनि द्वेषः उत्पद्यते। एतेन नित्यानित्यवस्तुविवेकः यदा सिद्धः भवति तदा एव द्वितीये साधने इहामुत्रफलभोगविरागरूपे यत्नः करणीयः।

## २४.३ इहामुत्रफलभोगविरागः

नित्यानित्यवस्तुविवेकरूपस्य प्रथमस्य साधनस्य फलरूपम् इदं साधनम् इहामुत्रफलभोगविरागः इति। इह अस्मिन् लोके अमुत्र स्वर्गलोके कर्मजन्यं यत् फलं प्राप्यते तस्य भोगः इहामुत्रफलभोगः, तस्मात् फलभोगात् विरागः विरक्तिः आसक्त्याः अभावः एव इहामुत्रफलभोगविरागः। इहामुत्रफलभोगविरागविषये वेदान्तसारे उक्तम् -

"ऐहिकानां स्रक्चन्दनवनितादिविषयभोगानाम् अनित्यत्ववत् आमुष्मिकाणाम् अपि अमृतादिविषयभोगानाम् अनित्यतया तेभ्यो नितरां विरतिः इहामुत्रफलभोगविरागः"इति।

इहलोके भव ऐहिकः। स्रक्, चन्दनं, वनिता, गृहं, क्षेत्रम् - इत्यादिविषयाः इहलोके भवाः अर्थात् इहलोके एव तिष्ठन्ति, अत एते विषया ऐहिकाः। एतेषां विषयाणां भोगेन एव जीवाः आत्मानं सुखिनः इति मन्यन्ते। परन्तु ऐहिकवस्तुभ्यः यत् सुखं प्राप्नुवन्ति जीवाः तत् अनित्यम्। यतो हि विषयाः अनित्याः। अतः ततः जन्यं सुखम् अपि अनित्यम्। एवम् एव आमुष्मिकाणां स्वर्गसुखानाम् अमृतादिविषयभोगानाम् अपि अनित्यत्वम्। तत्र प्रमाणम् -

"तद्यथेह कर्मजितो लोकः क्षीयते एवम् एव अमुत्र पुण्यजितो लोकः क्षीयते" (छा - १/८/१६) इत्यादयः श्रुतयः।

अर्थात् कर्मणा जितः पृथिवीलोकः भोगेन क्षीयते तथैव पुण्येन जितः लोकः स्वर्गलोकः अपि भोगेन क्षीयते। "क्षीणे पुण्ये मर्त्यलोकं विशन्ति"(गीता ९.२१) इति गीतावचनम् अपि प्रमाणम्। अतः लौकिकं सुखं तथा स्वर्गसुखम् उभयम् अपि अनित्यम्। यतो हि ते अनित्याः अतः तेभ्यः नितरां विरतिः अत्यन्ततया विमुखता एव इहामुत्रफलभोगविरागः। विवेकचूडामणौ अपि उक्तम् -

**"तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः।**
**देहादिब्रह्मपर्यन्ते ह्यनित्ये भोगवस्तुनि।।" इति। (२१)**

स्वदेहात् आरभ्य ब्रह्मलोकपर्यन्ते भोग्यवस्तुनि दर्शनेन श्रवणेन वा या जुगुप्सा घृणाबोधः तत् एव वैराग्यम्। अर्थात् मनुष्यशरीरम् अनित्यम् इति सर्वे एव जानन्ति। पुण्यकर्मणा पुरुषः ब्रह्मलोकं प्राप्नोति। यद्यपि तत्र निवासः दीर्घकालपर्यन्तं भवति तथापि नित्यं तत्र निवासः न सम्भवति। ब्रह्मलोके प्राप्तस्य सुखस्य अवसानं भवति एव। कानिचन वस्तूनि अनित्यानि इति दृष्ट्वा एव ज्ञायते, कानिचन



वस्तूनि अनित्यानि इति आप्तजनमुखात् श्रुत्वा ज्ञायते। उभयप्रकारेण भोग्यवस्तुनः अनित्यत्वं ज्ञात्वा तस्मिन् या जुगुप्सा घृणाभावः तत् एव वैराग्यम् इति उच्यते।

एवम् अनित्ये वस्तुनि यदा वैराग्यम् उत्पद्यते तदा नित्यं वस्तु ज्ञातुं मनः आकुलितं भवति। तदैव साधकः साधनचतुष्टये तृतीयं साधनं साधितुं प्रारभते।

## २४.४ शमादिषट्कसम्पत्तिः

अधिकारी द्वितीयसाधनसम्पन्नः यदा भवति तदा तृतीयसाधनस्य मार्गः उन्मुक्तः भवति। तृतीयसाधनं भवति शमादिषट्सम्पत्तिः इति। शमादिषण्णां साधनानां सम्पत्तिः सम्प्राप्तिः इति शमादिषट्सम्पत्तिः। शमादयः हि शमः दमः उपरतिः तितिक्षा समाधानं श्रद्धा च। एतेषां सर्वेषां साधनानां प्राप्तिरेव शमादिषट्सम्पत्तिः। के तावत् शमादयः इति चेत् शमादीनां षण्णां वर्णनम् एकैकशः अधस्तात् क्रियते -

### २४.४.१ शमः

"शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यः मनसः निग्रहः" इति उक्तं वेदान्तसारे। वस्तुतः मनसः निग्रहः एव शमः। वेदान्ततत्त्वस्य श्रवण-मनन-निदिध्यासनेन एव तत्त्वज्ञानं जायते। येन वृत्तिविशेषेण आत्मविषयकश्रवणादिभिन्नविषयेभ्यः बलात् मनसः निग्रहः भवति सः शमः। जीवस्य चित्तम् अतिशयचपलम्। एकस्मिन् विषये दीर्घकालं यावत् न तिष्ठति। बुभुक्षोः भोजनं प्रति यथा अभिरुचिः भवति तथा एव वैराग्ययुक्तस्य पुरुषस्य मनः तत्त्वज्ञाने अभिरुचिसम्पन्नं सत् अपि पूर्वसंस्कारवशात् विक्षिप्तं भवति। तस्यां दशायां येन वृत्तिविशेषेण पार्थिवं सुखम् अनित्यं परिणामे दुःखजनकम् इति बलपूर्वकं विषयेभ्यः आकर्षति सः शमः। उच्यते च सुबोधिन्याम् -

"यथा तीव्रायां बुभुक्षायां भोजनाद् अन्यव्यापारो मनसे न रोचते, भोजने च विलम्बं न सहते, तथा स्रक्चन्दनादिविषयेषु अन्त्यन्तम् अरुचिः, तत्त्वज्ञानसाधनेषु श्रवणमननादिषु अत्यन्तम् अभिरुचिर्जायते यदा, तदा पूर्ववासनाबलात् श्रवणादिसाधनेभ्यः उड्डीय स्रक्चन्दनादिविषयेषु गम्यमानं मनः, येनान्तःकरणवृत्तिविशेषेण निगृह्यते, स वृत्तिविशेषः शम इत्यर्थः" इति।

विवेकचूडामणौ अपि उक्तम् -

**"विरज्य विषयव्राताद्दोषदृष्ट्या मुहुर्मुहुः।**
**स्वलक्ष्ये नियतावस्था मनसः शम उच्यते।।"इति (२२)**

मुहुर्मुहुः प्रतिक्षणं, दोषदृष्ट्या दोषदर्शनेन, विषयव्रातात् विषयसमूहात् विरज्य वैराग्यप्राप्त्या मनसः स्वलक्ष्ये ब्रह्मतत्त्वज्ञाने नियतावस्था निश्चलरूपेण अवस्थानं शमः उच्यते कथितो भवति इति श्लोकस्य अस्य अर्थः।

## २४.४.२ दमः

"दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्" इति वेदान्तसारे उक्तम्। बाह्येन्द्रियाणि चक्षु-कर्ण-नासिका-जिह्वा-त्वगाख्यानि पञ्च। एतेषाम् इन्द्रियाणाम् मध्ये चक्षुषः रूपं प्रति, कर्णस्य शब्दं प्रति, नासिकायाः गन्धं प्रति, जिह्वायाः रसं प्रति, त्वचः च स्पर्शं प्रति स्वाभाविकतया प्रवृत्तिः दृश्यते। आत्मविषयक-श्रवणमननादिषु यदा मनसः प्रवृत्तिः भवति तदा बाह्येन्द्रियाणि स्वविषयं प्रति धावन्ति चेत् अन्तःकरणस्य येन वृत्तिविशेषेण इन्द्रियाणां स्वविषयं प्रति धावनं निराक्रियते सः दमः। अतः दमः वै बाह्येन्द्रियाणां निग्रहः। तस्मादुच्यते वेदान्तसारस्य टीकायां सुबोधिन्याम् - "ज्ञानसाधनश्रवणादिभ्यो विलक्षणेषु शब्दादिविषयेषु प्रवर्त्तमानानि श्रोत्रादीनि बाह्येन्द्रियाणि येन वृत्तिविशेषेण निवर्तन्ते स दम इत्यर्थः" इति। आदौ अन्तरिन्द्रियस्य निग्रहः कर्तव्यः। ततः बाह्येन्द्रियाणां निग्रहः। तस्मात् आदौ शमस्य निर्देशः ततः दमस्य निर्देशः। यदि मनः वशीभूतं भवति तर्हि चक्षुरादीनां निग्रहः सम्भवः। मनसः सङ्कल्पवशात् एव चक्षुरादयः रूपादिषु धाविताः भवन्ति। यदि कोऽपि पुरुषः कस्मिंश्चित् विषये मनसः नियोगं करोति तर्हि तस्य सम्मुखे सुरूपं तिष्ठति चेत् अपि न पश्यति, सुगीतं भवति चेत् अपि न शृणोति। अतः मनसः निग्रहः भवति चेत् बहिरिन्द्रियाणां स्वतः निग्रहः भवति। परन्तु संस्कारवशात् मनः विक्षिप्तं भवति, इन्द्रियाणि च स्वविषयं प्रति धावन्ति। तस्मात् पुनः पुनः यत्नः कर्तव्यः। विवेकचूडामणौ दमविषये उक्तम् -

**"विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके।**
**उभयेषामिन्द्रियाणां स दमः परिकीर्तितः।।" इति** (२३)

उभयेषाम् इन्द्रियाणां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च विषयेभ्यः स्वस्वविषयेभ्यः परावर्त्य विमुखीकृत्य स्वस्वगोलके स्वस्वस्थाने स्थापनं स्थिरीकृत्य निश्चलरूपेण रक्षणं, सः दमः परिकीर्तितः कथितः।

शमदमवान् पुरुषः एव स्थितप्रज्ञः इति भगवान् श्रीकृष्णः अपि गीतायाम् उक्तवान् -

**"यदा संहरते चायं कुर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।" इति** (२/५८)

यदा अयं कुर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तस्य प्रज्ञा प्रतिष्ठिता भवति इति अन्वयः। अर्थात् इन्द्रियाणि सर्वदा अपि शब्दादिषु विषयेषु प्रवृत्तानि भवन्ति। कूर्मः यथा भयात् स्वानि अङ्गानि संकोचयति तथा यदा अयं ज्ञाननिष्ठायां प्रवृत्तः जनः सर्वाणि इन्द्रियाणि शब्दादिभ्यः संकोचयति तदा तस्य प्रज्ञा प्रतिष्ठिता भवति। स च स्थितप्रज्ञः भवति।



## पाठगतप्रश्नाः-१

२३. साधनचतुष्टयम् किम्?

२४. अद्वैतवेदान्तमते नित्यानि वस्तूनि कानि?



२५. ब्रह्मणः नित्यत्वे श्रुतिप्रमाणं किम्?

२६. विवेकचूडामणौ नित्यानित्यवस्तुविवेकविषये किम् उक्तम्?

२७. दमो वै किम्?

a) मनसः निग्रहः b) बहिरिन्द्रियाणां निग्रहः c) अन्तरिन्द्रियाणां निग्रहः

२८. शमः वै किम्?

२९. शमादयः के?

३०. स्वर्गादीनाम् अनित्यत्वे श्रुतिप्रमाणं किम्?

## २४.४.३ उपरतिः

वेदान्तसारे उपरतेः लक्षणद्वयम् उक्तम् - "निवर्तितानाम् एतेषां तद्व्यतिरिक्तविषयेभ्यः उपरमणम् उपरतिः" अथवा "विहितानां कर्मणां विधिना परित्यागः" इति।

मनसः तथा बहिरिन्द्रियाणां निग्रहणेन एव तत्त्वज्ञानस्य मार्गः उन्मुक्तः न भवति। पूर्वतनवासनावशात् तानि इन्द्रियाणि मनश्च पुनः चञ्चलानि भवन्ति। अतः निवर्तितानाम् इन्द्रियाणाम् मनसः च श्रवणादिसाधनव्यतिरिक्तविषयेषु शब्दादिषु प्रवृत्तिः भवति। तदा येन वृत्तिविशेषेण तेषां निग्रहः क्रियते सा उपरतिः। अर्थात् श्रवणादिव्यतिरिक्तविषयेभ्यः पुनः पुनः दोषदर्शनेन उपरमणम् निवृत्तिः एव उपरतिः। तथाहि उच्यते सुबोधिन्याम् - "निगृहीतानाम् एतेषां बाह्येन्द्रियाणां श्रवणादिसाधनव्यतिरिक्तेषु शब्दादिविषयेषु यथा तानीन्द्रियाणि सर्वथा न गच्छन्ति, तथा तेषां निग्रहो येन वृत्तिविशेषेण क्रियते, सोपरतिः इत्यर्थः" इति। उपरतेः लक्षणान्तरम् उच्यते वेदान्तसारकारेण सदानन्दयोगीन्द्रेण - "विहितानां कर्मणां विधिना परित्यागः" इति। शास्त्रविहितानां नित्यनैमित्तिकप्रायश्चित्तानां विधिपूर्वकं सन्न्यासाश्रमस्वीकारेण परित्यागः एव उपरतिः। अर्थात् अहं कर्ता नास्मि इति भावनया सर्वकर्मत्यागः एव उपरतिः। विवेकचूडामणौ उक्तम् - "बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा।" इति। वृत्तेः मनसः विषयप्रकाशकशक्तेः, बाह्यानालम्बनं बाह्यानात्मवस्त्वाकारेण अपरिणतभवनम् एव उत्तमा उपरतिः।

## २४.४.४ तितिक्षा

"तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता" इति उक्तम्। अर्थात् शीतोष्णप्रभृति-विपरीतविषयान् तथा ततः उत्पन्नसुखदुःखादीनां सहनम्। सर्वे जीवाः सुखेन आनन्दम् अनुभवन्ति। आनन्देन प्रमादः न भवति। परन्तु दुःखस्य सहनं सर्वे कर्तुं न शक्नुवन्ति। अतः दुःखकारणात् प्रमादं कुर्वन्ति बहवः। परन्तु यः तितिक्षाम् अभ्यस्यति तस्य समीपे सुखं दुःखम् उभयम् अपि समानम्। सः सुखेन अत्यधिकम् आनन्दम् न अनुभवति, दुःखेन अपि दुःखितः न भवति। अतः सः अप्रमादः धैर्यवान् भूत्वा साधनातः अविचलितः भवति। विवेकचूडामणौ उक्तम् -

**"सहनं सर्वदुःखानामप्रतीकारपूर्वकम्।**

**चिन्ताविलापरहितं सा तितिक्षा निगद्यते।।"इति।**

सर्वदुःखानां सर्वविधदुःखानां चिन्ताविलापरहितं चिन्तां विलापं च त्यक्त्वा अप्रतीकारपूर्वकम् प्रतीकारं न कृत्वा सहनं स्वीकारः एव तितिक्षा निगद्यते उच्यते इत्यर्थः।

गीतायाम् अपि भगवता वासुदेवेन उच्यते -

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**
**वीतरागभयक्रोधस्थितधीर्मुनिरुच्यते।। इति।**

वस्तुतः शमदमोपरतिभ्यः बहिर्विषयेभ्यः निवृत्तिः भवति। तितिक्षायां तु अन्तर्विषयेभ्यः चित्तस्य निवर्तनं भवति।

## २४.४.५ श्रद्धा

केवलेन श्रवणादिना तत्त्वसाक्षात्कारः न भवति। तदपि श्रद्धापूर्वकं कर्तव्यम् एव। श्रद्धा वै का इति चेत् उच्यते - "गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा" इति। गुरुवचनेषु तथा गुरूपदिष्टशास्त्रवचनेषु दृढतरनिश्चयः एव श्रद्धा। आत्मतत्त्वजिज्ञासोः श्रद्धा एव मेरुदण्डः। श्रद्धा न तिष्ठति चेत् शतशः उपदिष्टः अपि अर्थस्य अवधारणं न भविष्यति। अतः आत्मजिज्ञासोः श्रद्धायाः अवलम्बनम् अनिवार्यम्। गीतायाम् गीयते भगवता "श्रद्धावान् लभते ज्ञानम्" इति। भगवता शङ्कराचार्येण श्रद्धाविषये विवेकचूडामणौ उक्तम् -

**"शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम्।**
**सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते।।"इति।**

गुरुवाक्यस्य गुरुणा उपदिष्टस्य वाक्यस्य, तथा शास्त्रवाक्यस्य वेदान्तवाक्यस्य, सत्यबुद्ध्यवधारणं सत्यतया ग्रहणं, यया येन निश्चयेन वस्तूपलभ्यते आत्मनः उपलब्धिः भवति सा श्रद्धा कथिता सर्वैः उक्ता।

## २४.४.६ समाधानम्

"निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्।" अर्थात् विषयेभ्यः प्रत्याहितस्य चित्तस्य आत्मनः विषये श्रवण-मनन-निदिध्यासने तथा तस्य अनुगुणविषये गुरुशुश्रुषादौ अवस्थानम् एव समाधानम्। अस्याम् दशायाम् एवं किमपि न कर्तव्यं येन आत्मविषयस्मृतिधारायाः विच्छेदो भवति। आत्मविषयकप्रत्ययप्रवाहस्य उत्पादनम् एव समाधिः, तदेव समाधानम्। विवेकचूडामणौ उक्तम् -

**"सम्यगास्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वथा।**
**तत्समाधानमित्युक्तं न तु चित्तस्य लालनम्।।"इति।**

शुद्धे निर्गुणे ब्रह्मणि ब्रह्मविषयकतत्त्वज्ञाने बुद्धेः चित्तस्य सम्यक् यथार्थतया आस्थापनं स्थिरीकरणम् एव समाधानम् इत्युक्तम्। तु किन्तु चित्तस्य लालनम् कौतुहलात् वेदान्ततत्त्वस्य आलोचनेन मनसः तृप्तिलाभः न समाधानम् इत्यर्थः। समाधिं विना आत्मसाक्षात्कारः न भवति।



एवं शमादिषट्कसम्पत्तिः सहकारिसाधनेषु अन्यतमा। साधनचतुष्टयस्य सिद्धौ आत्मज्ञानम् अनायासतया जायते साधकस्य। एवं साधनचतुष्टयसम्पन्नः अधिकारी तत्त्वमस्यादिवेदान्तवाक्यश्रवणात् अद्वैतं ब्रह्मात्मज्ञानम् आप्नोति।

## २४.५ मुमुक्षुत्वम्

मुमुक्षुत्वस्य अर्थः मोक्षे इच्छा। आत्मज्ञानप्राप्तये एतत् एव प्रधानं साधनम्। यदि पुरुषस्य मोक्षप्राप्तये इच्छा न भवति तर्हि मोक्षोपायस्य अन्वेषणं न करोति। तस्मात् आत्मदर्शनम् अपि न करोति। आत्मदर्शनं मोक्षस्य मार्गः इति वेदान्ततत्त्व-श्रवण-मनन-निदिध्यासनम् आत्मदर्शने कारणम् इति बोद्धुं न शक्नोति। अतः वेदान्ते तस्य प्रवृत्तिः एव न स्यात्। तेन वेदान्तैकवेद्यस्य आत्मनः ज्ञानम् अपि तस्य न भवति। अतः अधिकारिणः मोक्षेच्छा अवश्यं भवितव्या। विवेकचूडामणौ शङ्कराचार्येण उक्तम् -

**"अहंकारादिदेहान्तान् बन्धानज्ञानकल्पितान्।**
**स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता।।"इति।**

अहंकारादिदेहान्तान् सूक्ष्मात् अहंकारात् आरभ्य स्थूलदेहपर्यन्तम्, अज्ञानकल्पितान् अज्ञानात् उत्पन्नान् बन्धान् बन्धसहमूहान् स्वस्वरूपावबोधेन आत्मज्ञानेन मोक्तुम् इच्छा एव मुमुक्षुता इत्यर्थः।

एवं साधनचतुष्टयं निरूपितम्। यावत् नित्यानित्यवस्तुविवेकः न भवति तावत् अनित्ये वस्तुनि वैराग्यं न उत्पद्यते। वैराग्यं विना शमादीनाम् अपि आचरणं न सम्भवति। शमादीनाम् अभावे मोक्षविषयिणी इच्छा एव न सम्भवति। मोक्षे इच्छां विना ब्रह्मजिज्ञासा अपि न स्यात्। तस्मात् आदौ नित्यानित्यवस्तुविवेकः ततः इहामुत्रफलभोगविरागः ततः शमादिषट्कसम्पत्तिः ततः मुमुक्षुत्त्वम् इति क्रमेण तेषामुल्लेखः।

एवं साधनचतुष्टयसम्पन्न एव प्रमाता वेदान्तविद्यायाम् अधिकारी भवति। अत्र श्रुतेः प्रमाणम् अपि प्राप्यते -

"**शान्तो दान्त उपरतिस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्यति**"इति।

अर्थात् यस्य मनः शान्तम्, इन्द्रियाणि न चञ्चलानि, यः सन्न्यासदीक्षां प्राप्तवान्, यः सुखदुःखेषु समानमनाः तिष्ठति सः समाहितः भूत्वा एकाग्रभावं प्राप्य आत्मनि एव आत्मानं पश्यति।

अस्य श्रुतेः समर्थनं करोति उपदेशसाहस्रीगतं वाक्यम् इदम् -

**"प्रशान्तचित्ताय जितेन्द्रियाय च**
**प्रहीणदोषाय यथोक्तकारिणे।**
**गुणान्विताय अनुगताय सर्वदा**
**प्रदेयमेतत् सततं मुमुक्षवे।।"** (३२४,१६/१२)

प्रशान्तचित्ताय यस्य मनः शान्तं तस्मै, जितेन्द्रियाय यस्य इन्द्रियाणि चञ्चलानि न भवन्ति, प्रहीणदोषाय यः त्याज्यकर्म परित्यज्य नित्यादिकर्मणाम् अनुष्ठानं करोति तस्मै, गुणान्विताय विवेकवैराग्यादिगुणविशिष्टाय, यथोक्तकारिणे अनुगताय सर्वदा यः गुरोः तथा शास्त्रवचनं निर्देशानुसारं

पालयति सर्वदा आचार्यस्य अनुगतः एव तिष्ठति तस्मै, सततं मुमुक्षवे मोक्षप्राप्तये यस्य अदम्यः उत्साहः तस्मै एतत् ब्रह्मविद्या प्रदेयं दातव्यम् इति।

## २४.६ साधनचतुष्टयम् एव ब्रह्मविद्याधिकारः

पूर्वम् अस्माभिः वेदान्तशास्त्रस्य अनुबन्धचतुष्टये अधिकारी कः भवति इति आलोचितम् । यस्य साधनचतुष्टयं विद्यते स एव जनः वेदान्तशास्त्रे अधिकारी भवति। स वेदान्तशास्त्रेण बोधितस्य विषयस्य अवगमने समर्थः भवति इत्यर्थः। आत्मस्वरूपम् ब्रह्म एव इति वेदान्तशास्त्रेण बोध्यते। इदम् आत्मब्रह्मणोः ऐक्यम् अथवा जीवब्रह्मणोः ऐक्यं वेदान्तशास्त्रस्य विषयः भवति। इमं विषयं वेदान्ताध्ययनेन साधनचतुष्टयसम्पन्नः एव नरः अवगच्छति, न अन्यः। तस्मात् वेदान्तशास्त्रस्य अधिकारी साधनचतुष्टयसम्पन्नः एव इति ज्ञायते।

यः नद्याः परं पारं गन्तुमिच्छति स नौकाम् आरुह्य स्फ्यां चालयित्वा तत्र गन्तुं शक्नोति । किन्तु हस्ते स्फ्या नास्ति चेत् नौकायाः आरोहणं कृत्वापि सः तया नौकया परपारम् प्राप्तुं समर्थः न भवति । यस्य हस्ते स्फ्या अस्ति स नौकाम् आरुह्य सुखेन स्फ्यां चालयन् नद्याः परम् पारं गच्छति। एवमेव संसारस्य पारम् मोक्षाख्यं यः गन्तुम् इच्छति स वेदान्तवाक्यानां श्रवणादिरूपेण उपायेन तत्र गन्तुं शक्नोति। किन्तु यस्य साधनचतुष्टयं नास्ति स श्रवणादिकं कृत्वा अपि आत्मस्वरूपम् ब्रह्म ज्ञातुं समर्थः न भवति। साधनचतुष्टयसम्पन्नस्तु ब्रह्मबोधकानि वेदान्तवाक्यानि श्रुत्वा मत्वा निदिध्याय च ब्रह्मविद्याम् अवश्यं लभते, जननमरणरूपात् संसारात् मुक्तश्च भवति। तस्मात् स एव नरः ब्रह्मविद्याधिकारी । स एव ब्रह्मविद्यायाः अन्तरङ्गसाधनानि उपनिषद्वाक्यश्रवणादीनि कर्तुं योग्यः भवति इत्यर्थः। ब्रह्मविद्याधिकारी अद्वैतशास्त्रग्रन्थेषु क्वचित् "मोक्षे अधिकारी", "वेदान्तश्रवणे अधिकारी", "वेदान्ते अधिकारी" इति च निर्दिश्यते ।

साधनचतुष्टयसम्पन्नस्य ब्रह्मविद्याधिकारिणः विषये विवेकचूडामणौ शङ्करभगवत्पादाः प्राहुः –

**विवेकिनो विरक्तस्य शमादिगुणशालिनः।**
**मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥** (विवेकचूडामणिः, श्लोकः १७) इति ।

**अन्वयः** –विवेकिनः विरक्तस्य शमादिगुणशालिनः मुमुक्षोः एव हि ब्रह्मजिज्ञासायोग्यता मता ।

**तात्पर्यम्** – यः विवेकी विरक्तः शमदमादिगुणसहितः मुमुक्षुः च भवति तस्य एव ब्रह्मजिज्ञासायां योग्यता अस्ति इति शास्त्रस्य आचार्याणां च मतम् । ब्रह्मजिज्ञासा इत्यस्य अत्र ब्रह्मविचारः इत्यर्थः। श्रवणम् मननं निदिध्यासनं चेति त्रिभिः उपायैः उपनिषद्वाक्यानि समाश्रित्य ब्रह्म कीदृशम् इति विचारः क्रियते। तस्मात् ब्रह्मजिज्ञासायां योग्यता इत्यस्य श्रवणादिषु योग्यता इत्यर्थः। विवेकादीनि साधनानि विना ब्रह्मविचारः फलप्रदः न भवति। ब्रह्मविचारस्य ब्रह्मविद्या एव फलम्। विवेकादिसाधनैः सम्पन्नः एव जनः श्रवणादिना तत् फलम् प्राप्तुं योग्यः। तस्मात् साधनचतुष्टयसम्पन्नस्य एव ब्रह्मजिज्ञासायोग्यता अभिमता ।



## २४.७ साधनचतुष्टयसम्पन्नः नचिकेताः

कठोपनिषदि साधनचतुष्टयसम्पन्नस्य नचिकेतसः कथा श्रूयते ।

वाजश्रवसस्य पुत्रः आसीत् बालकः नचिकेताः। एकदा वाजश्रवसः यागं कृतवान्। यागान्ते दक्षिणारूपेण वृद्धाः दुग्धहीनाः गाः दत्तवान्। तत् दृष्ट्वा नचिकेताः शास्त्रविधानानि स्मरन् चिन्तितवान् – ईदृश्या दक्षिणया पिता स्वेन कृतस्य यागस्य इष्टं फलं न प्राप्नुयात्, अपि तु अनिष्टं फलं प्राप्नुयात्। अतः तस्य पुत्रेण मया एव अयं यागः सफलः कर्तव्यः इति। एवम् मत्वा नचिकेताः पितुः समीपं गत्वा हे पितः, कस्मै मां दक्षिणारूपेण त्वं दास्यसि इति अपृच्छत्। पुनः पुनः एवं पृष्टे सति कुपितः वाजश्रवसः त्वाम् मृत्यवे दास्यामि इति अवदत्। उक्त्वा वाजश्रवसः किमिदम् मया उक्तमिति चिन्तयन् दुःखी अभवत्। किन्तु नचिकेताः पितुः वचनम् मिथ्या मा भूत् इति मत्वा मृत्युदेवस्य यमस्य गृहं गतवान्। नचिकेतसि तत्र गते यमः अन्यत्र क्वचित् आसीत्। यमलोके कोऽपि नचिकेतसे अतिथिसत्कारं न अकरोत्। तथापि अक्षुब्धः सन् नचिकेताः रात्रित्रयं यमालये अवसत्। यमः स्वगृहम् प्रत्यागत्य सर्वं श्रुत्वा नचिकेतसम् अर्घ्यपाद्यादिभिः पूजयित्वा अवदत् – हे ब्रह्मन्, काले पूजादिकं तुभ्यम् मया न कृतम्। क्षमस्व। भोजनादिकं विना त्वया उषितं रात्रित्रयम् प्रति अहं वरत्रयं तुभ्यं दास्यामि। यथेच्छम् पृच्छ इति। नचिकेताः प्रथमवररूपेण पितुः सौख्यम् इष्टवान्। यमः तमेव वरं तस्मै प्रादात्। द्वितीयवररूपेण नचिकेताः स्वर्गप्राप्तेः उपायभूतां विद्याम् अकामयत। यमः तमपि वरं नचिकेतसे अयच्छत्। तृतीयवररूपेण च आत्मस्वरूपं ज्ञातुम् इष्टवान्। अस्य वरस्य प्रदानं तु यमः न अनुमतवान्। साधनचतुष्टयसम्पन्नाय अधिकारिणे एव आत्मस्वरूपम् उपदेष्टव्यम्, अन्यथा स उपदेशः फलदायी न भविष्यति इति यमः जानाति स्म। तस्मात् नचिकेतसः साधनचतुष्टयम् अस्ति वा इति परीक्षितुं निश्चितवान् मृत्युदेवः यमः।

आत्मस्वरूपज्ञानस्य स्थाने अन्यं कमपि वरम् प्रष्टुं यमः नचिकेतसम् अवोचत्। आत्मज्ञानम् एकं विहाय प्रपञ्चे यत्किमपि यथेच्छम् तुभ्यम् प्रददामि, पृच्छ इति यमः तम् बालकम् प्रचोदितवान्। सेविकाः, रथाः, हस्ती, हिरण्यम्, वित्तम्, दीर्घं जीवनम् इत्यादिकं यद्यद् इच्छसि तत् सर्वं दास्यामि इति यमः यदा उक्तवान् तदा नचिकेताः अवदत् – अनित्यं खलु इदम् अखिलं वस्तु। अनित्यमिदं जगत्। अत्र जगति जीवनमपि दीर्घं चेदपि अनित्यमेव भविष्यति। अहम् अनित्यं किमपि न वाञ्छामि, अपि तु नित्यम् आत्मज्ञानमेव मम अभीष्टम्। तस्मात् तदेव मह्यं देहि इति। इदं श्रुत्वा यमः नचिकेतसः नित्यानित्यवस्तुविवेकः अस्ति इति ज्ञातवान्।

रथः हस्ती हिरण्यं दीर्घजीविका इत्यादीन् ऐहिकान् भोगान्, अप्सरःप्रभृतीन् आमुष्मिकान् भोगान् च दास्यामि इति यदा यमः प्रलोभनं कृतवान् तदा नचिकेताः दृढम् अवोचत् – एषु भोगेषु मम रतिः नास्त्येव। एतान् अहं नैव वृणोमि। मम वरणीयः वरः आत्मज्ञानम् एव इति। अनेन नचिकेतसः इहामुत्रार्थफलभोगविरागोऽपि अस्ति इति यमेन अवगतम्।

नचिकेतसः शमादिसम्पत्तिरपि इतः एव अवगतं यमेन। मनसः इन्द्रियाणाञ्च निग्रहः खलु शमदमौ। तौ नचिकेतसि नितरां विद्येते इत्यतः एव स यमेन प्रदर्शितैः विषयोपभोगैः प्रलोभितः न जातः। तितिक्षा अपि नचिकेतसि अस्ति। शीतोष्ण-सुखदुःख-मानापमानादिरूपं यत् द्वन्द्वं तस्य विषये सहिष्णुता



एव तितिक्षा इति उच्यते। नचिकेताः यमगृहम् प्रति यदा आगतवान् तदा सर्वैः उपेक्षितः एव सन् रात्रित्रयम् तत्र उषितवान्। केनापि तस्मै भोजनमपि न प्रदत्तम्, सम्माननस्य कथा तु दूरे। तथापि यदा यमः अर्घ्यपाद्यादिभिः तं पूजितवान् तदा क्षोभं विनैव अप्रतीकारपूर्वकं तत् स्वीकृतवान् नचिकेताः। नचिकेताः तितिक्षवान् इति ज्ञातुं यमस्य इतः अधिकं किम् प्रमाणम् आवश्यकम्। श्रद्धा अपि तस्य बालकस्य स्फुटा। शास्त्रे गुरुवाक्ये च विश्वासः अथवा आस्तिक्यबुद्धिरेव श्रद्धा इत्युच्यते। यागे निष्फलगवां दानं कुर्वन्तम् पितरं दृष्ट्वा शास्त्रोपदेशं स्मरति नचिकेताः। किञ्च शास्त्रे बोधितम् पुत्रधर्मं स्मृत्वा स्वसमर्पणेन अपि पितुः यागं सफलं कर्तुं स यतते। अपि च आत्मस्वरूपस्य उपदेशाय यमः इव समर्थः अन्यः आचार्यः सुखेन न लभ्यते इत्यपि नचिकेताः वदति। इतश्च तस्य गुरोः यमस्य वचने श्रद्धा अस्तीति अवगम्यते। एवञ्च शमादिषु केचन गुणाः नचिकेतसि स्पष्टं दृश्यन्ते इत्यतः अन्येऽपि गुणाः तस्मिन् विद्यन्ते इति ज्ञातुं शक्यते।

मुमुक्षुत्वम् अथवा मोक्षेच्छा अपि नचिकेतसः विद्यते। अत एव खलु स निरवधिप्रलोभनानां सम्मुखेऽपि मोक्षस्य उपायभूतम् आत्मज्ञानमेव केवलम् पुनः पुनः प्रार्थयति।

एवं नचिकेताः साधनचतुष्टयसम्पन्नः इति यमः परीक्षणेन निश्चितवान्। ततः स मोक्षस्य अन्तरङ्गसाधनेषु श्रवणमनननिदिध्यासनेषु अधिकारी इति ज्ञात्वा यमः तस्मै आत्मस्वरूपम् उपादिशत्। आचार्यस्य यमस्य मुखात् आत्मस्वरूपम् ब्रह्म श्रुत्वा च नचिकेताः ब्रह्मज्ञानी अभवत्।



## पाठगतप्रश्नाः-२

३१. उपरतिः वै का?

३२. तितिक्षा वै का?

३३. श्रद्धा वै का?

३४. समाधानं वै किम्?

३५. मुमुक्षुत्वं वै किम्?

३६. साधनचतुष्टयसम्पन्नः एव वेदान्तविद्यायाम् अधिकारी भवति इत्यत्र श्रुतिप्रमाणं किम्?

३७. नचिकेताः कस्य पुत्रः आसीत्?

a) अग्नेः b) वाजश्रवसस्य c) यमस्य d) याज्ञवल्क्यस्य

## २४.८ श्रवण-मनन-निदिध्यासनानि

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृह.उ.२.२.४) इति मन्त्रेण उपनिषदि आत्मनः श्रवणं मननं निदिध्यासनं च उपदिष्टम्। आत्मसाक्षात्कारं प्रति श्रवण–मनन–निदिध्यासनानि साक्षात्कारणानि इति कारणात् प्रसङ्गे अस्मिन् श्रवणमनननिदिध्यासनानि



आलोचनीयानि। यावत् स्वस्वरूपचैतन्यसाक्षात्कारः न भवति तावत् श्रवणमनननिदिध्यासनानि अनुष्ठेयानि। तस्मात् उच्यते वेदान्तसारे – "स्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवण–मनन–निदिध्यासन–समाध्यनुष्ठानस्य अपेक्षितत्वात्" इति। "आवृत्तिरसकृदुपदेशात्" (४.१.१) इति ब्रह्मसूत्रे अपि सूत्रकारेण बादरायणेण श्रवणादीनां पुनः पुनः अनुष्ठानं कर्तव्यम् इति प्रतिपाद्यते। भाष्यकारेण शङ्करभगवत्पादेनापि निगद्यते – "दर्शनपर्यवसानानि हि श्रवणादीनि आवर्त्यमानानि दृष्टार्थानि भवन्ति, यथा अवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत्" इति। अस्यार्थः हि – यथा पुनः पुनः अवघातेन धान्येभ्यः तण्डुलानि निष्पद्यन्ते, यावत् न तण्डुलनिष्पत्तिः तावत् अवघातः कर्तव्यः इति तथा एव यावत् तत्त्वसाक्षात्कारः न भवति तावत् श्रवणादीनां पुनः पुनः अभ्यासः कर्तव्यः इति।

## २४.८.१ श्रवणम्

धर्मराजाध्वरीन्द्रविरचिते वेदान्तपरिभाषाभिधेये अद्वैतवेदान्तप्रकरणग्रन्थे अपि ब्रह्मसाक्षात्कारहेतुत्वेन श्रवणमनननिदिध्यासनानि निगदितानि। तत्र श्रवणस्य विषये उच्यते - "श्रवणं नाम वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया" इति। श्रवणं वै न केवलं कर्णाभ्यां वेदान्तवाक्यानां श्रवणम्, अपि तु अशेषाणि वेदान्तवाक्यानि श्रुत्वा तेषां सर्वेषां वेदान्तवाक्यानाम् तात्पर्यम् अद्वैते ब्रह्मणि एव इति निश्चयः। वेदान्तसारे अपि श्रवणविषये उच्यते - "श्रवणं नाम षड्विधलिङ्गैः अशेषवेदान्तानाम् अद्वितीयवस्तुनि तात्पर्यावधारणम्" इति।

### तात्पर्यशब्दार्थः

ननु किं वै तात्पर्यनिर्णायकलिङ्गम्? लीनं गमयतीति लिङ्गम्, तात्पर्यनिर्णयाय लिङ्गम् इति तात्पर्यनिर्णायकलिङ्गम्। ननु किं वै तात्पर्यम्? तत् अर्थः, स परो यस्य स तत्पर इति बहुव्रीहिः, अर्थपर इत्यर्थः। तस्य भावः तात्पर्यम् इति भावे ष्यञ्प्रत्ययः। शब्दः वाक्यं वा यदर्थपरं तत्प्रतीतिजननयोग्यत्वम् एव तात्पर्यम् इति व्युत्पत्तिलब्धः अर्थः। अद्वैतमते अद्वितीये ब्रह्मणि एव अशेषवेदान्तानां तात्पर्यम्। आकाङ्क्षा इव तात्पर्यम् अपि शाब्दबोधं प्रति सहकारिकारणम्। नैयायिकमते वक्तुः इच्छाविशेष एव तात्पर्यशब्दार्थः। लोके अभिप्रेतम् अर्थं बोधयितुं शब्दो वाक्यं वा प्रयुज्यते। तस्मात् शब्दाद् वाक्याद् वा ईदृशस्य अर्थस्य प्रतीतिः भवतु इति वक्तुः या इच्छा सैव तात्पर्यशब्दार्थः - "वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्" (अन्नम्भट्टस्य दीपिकाटीका ) इति। परन्तु तथा लक्षणे सति वेदस्य पुरुषकर्तृकत्वाभावाद् वेदेषु अव्याप्तिः, तस्माद् वैयाकरणैः ईश्वरेच्छा तात्पर्यत्वेन निगदिता। तेषां मते - एतद्वाक्यम् एतत्पदं वा एतदर्थबोधाय उच्चारणीयम् इति ईश्वरेच्छा तात्पर्यम् इति तात्पर्यस्वरूपम्। अतः सर्वज्ञेश्वरप्रणीतत्वात् नास्ति अत्र अतिव्याप्तिशङ्का। यत्र तु एकस्य एव शब्दस्य बहवः अर्थाः, तत्र वक्तुः इच्छा एव तात्पर्यम् इति तैः अपि अङ्गीक्रियते। वेदान्तमते तु - तत्प्रतीतिजननयोग्यत्वम् एव तात्पर्यम्। इष्टस्य अर्थस्य प्रतीतिजननसामर्थ्यम् एव तात्पर्यम् इति तस्यार्थः। शब्दस्य तादृशसामर्थ्यवशाद् एव भोजनप्रकरणे 'सैन्धवम् आनय' इति सैन्धवशब्दः लवणं बोधयति। ननु सैन्धवशब्दस्य अश्वबोधनसामर्थ्यसत्त्वे अपि कथं स लवणम् एव बोधयति इति चेत् - भोजनप्रकरणे सैन्धवशब्दात् अश्वार्थप्रतीतिः न भवतु इति

इच्छावशात् अश्वार्थप्रतीतियोग्यतासत्त्वे अपि अश्वः न प्रतीयते। ननु एतेन इच्छा एव तात्पर्यत्वेन अभिहिता इति चेत् न, तदितरप्रतीतिजननेच्छया अनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वस्य तात्पर्यत्वेन विवक्षितत्वात्। लौकिकवाक्येषु तु तात्पर्यं प्रकरणादिना अवगम्यते। तथाहि उच्यते वाक्यपदीये -

**वाक्यात् प्रकरणादर्थादौचित्याद्देशकालतः।**
**शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलम्।। इति।**

अस्यार्थः - वाक्यात् प्रकरणात् अर्थात् औचित्यात् देशतः कालतः च शब्दानाम् अर्थाः भिन्नाः भवन्ति, तस्मात् एतान् सर्वान् विषयान् विचार्य एव केनचित् शब्दानाम् तात्पर्यम् अवगन्तव्यम् इति।

वैदिकानां वाक्यानां तु केषाञ्चित् मते अधिकरणमुखेन, केषाञ्चित् मते उपक्रमादिना तात्पर्यनिर्णयः क्रियते।

अधिकरणं वै विषय-संशय-पुर्वपक्ष-उत्तरपक्ष-सङ्गत्यात्मकं पञ्चलिङ्गकम्। तथाहि उच्यते -

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।**
**सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्।। इति।**

## तार्पर्यनिर्णायकानि षट् लिङ्गानि

प्रकृते उपक्रमादिना तात्पर्यनिर्णयः क्रियते इत्यतः उपक्रमादिनां सामान्यपरिचयः प्रदीयते।

उपक्रमादितात्पर्यनिर्णायकलिङ्गप्रतिपादकः श्लोको हि -

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।। इति।**

उपक्रमोपसंहारौ, अभ्यासः, अपूर्वता, फलम्, अर्थवादः, उपपत्तिः चेति षट् तात्पर्यग्राहकलिङ्गानि। इदानीम् एतेषाम् उपक्रमादिलिङ्गानां स्वरूपवर्णनपुरःसरम् उदाहरणं सामान्यतः प्रदीयते -

**क) उपक्रमोपसंहारौ** - प्रकरणप्रतिपाद्यस्य अर्थस्य प्रकरणस्य आदौ अन्ते च उपपादनम् उपक्रमोपसंहारौ इति। यथा- छान्दोग्योपनिषदि षष्ठे अध्याये आदौ 'एकमेवाद्वितीयम्', अन्ते 'ऐतदात्म्यमिदं सर्वम्' इति अद्वितीयवस्तुनः प्रतिपादनं क्रियते।

**ख) अभ्यासः** - प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपादनम् अभ्यासः। यथा - छान्दोग्योपनिषदि अद्वितीयवस्तुनः मध्ये 'तत्त्वमसि' इति नवकृत्वा प्रतिपादनम् विद्यते।

**ग) अपूर्वता** - प्रकरणप्रतिपाद्यस्य अर्थस्य प्रमाणान्तरेण अविषयीकरणम् अपूर्वता इति। यथा छान्दोग्योपनिषदि अद्वितीयवस्तुनः प्रत्यक्षादिप्रमाणान्तरेण अविषयीकरणम्।

**घ) फलम्** - प्रकरणप्रतिपाद्यस्य आत्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनं फलम्। यथा - छान्दोग्योपनिषदि 'आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (छान्दोग्योपनिषदि ६.१४.२) इति अद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनम्।



**ङ) <u>अर्थवादः</u>** - प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनम् अर्थवादः। यथा छान्दोग्योपनिषदि 'उत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छान्दोग्योपनिषदि ६.१.३) इति अद्वितीयवस्तुनः प्रशंसनम् क्रियते।

**च) <u>उपपत्तिः</u>** - उपपत्तिर्हि युक्तिः। प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिः उपपत्तिः। यथा - 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादौ अद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते।

इत्थं छान्दोग्योपनिषदः षष्ठाध्यायस्य तात्पर्यम् अद्वितीयं ब्रह्म इति सुस्पष्टम्। एवमेव अन्ये उपनिषत्प्रकरणाः अपि द्रष्टव्याः। एवम् वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणम् एव श्रवणम् इति निगदितं यथाविस्तरम्।

### २४.८.२ मननम्

मननस्य लक्षणं निगद्यते वेदान्तपरिभाषाकारेण धर्मराजाध्वरिन्द्रेण "मननं नाम शब्दावधारिते अर्थे मानान्तरविरोधशङ्कायाम् तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः" इति। अस्यार्थः हि - श्रवणेन यः अर्थः निश्चितः भवति तत्र प्रमाणान्तरेण बहवः विरोधाः समागच्छन्ति। द्वैतवादिनः तत्र आक्षेपं कर्तुं शक्नुवन्ति, अथवा स्वमनसि एव विरुद्धाः युक्तयः आविर्भवितुम् अर्हन्ति। एवं सत्याम् येन मनोवृत्तिविशेषेण वेदान्तानुगुणयुक्तिभिः विरुद्धमतानां खण्डनं विधाय स्वमते दृढता सम्पाद्यते तदेव मननम् इति उच्यते। अध्यात्मोपनिषदि अपि आम्नायते - "युक्त्या सम्भवितत्त्वानुसन्धानं मननं तु तत्" इति। मननं हि तर्कात्मकम्, परन्तु एतेन वेदसिद्धान्ताविरोधी तर्कः ज्ञातव्यः, न तु वेदसिद्धान्तविरोधी तर्कः। तस्मादेव भगवता भाष्यकारेण उच्यते - "श्रुत्यनुगृहीतः एव ह्यत्र तर्कोनुभवाङ्गत्वेन आश्रियते" इति। मनुना अपि उक्तम् -

**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।।** इति। (मनुसंहिता १०.१०६)

अस्यार्थः - यः ऋषीणाम् धर्मोपदेशं वेदस्मृत्यादिशास्त्राविरोधिणा तर्केण अनुसन्धत्ते सः एव धर्मस्य यथार्थं स्वरूपं वेत्ति, न अन्यः इति।

वेदान्तसारकारेण मननविषये उच्यते - "मननं तु श्रुतस्य अद्वितीयवस्तुनः वेदान्तानुगुणयुक्तिभिः अनवरतम् अनुचिन्तनम्" इति। अतः वेदान्तवाक्यानि श्रुत्वा अद्वैतं ब्रह्मैव वेदान्तानाम् तात्पर्यम् इति विज्ञाय विरुद्धयुक्तिनां वेदसिद्धान्ताविरोधियुक्तिभिः निराकरणम् एव मननम् इति अर्थः फलति।

## २४.८.३ निदिध्यासनम्

श्रवणात् मननात् च अनन्तरं निदिध्यासनस्य लक्षणम् निगद्यते वेदान्तपरिभाषायाम् - "निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणचित्तस्य विषयेभ्यऽपकृष्यात्मविषयक-स्थैर्यानुकूलो मानसो व्यापारः" इति। अशेषाणां वेदान्तानाम् तात्पर्यम् अद्वितीये ब्रह्मणि इति निश्चिततया ज्ञानं भवति चेत् अपि अनादिकालाद् याः दुर्वासनाः अस्माकं मनःसु विद्यन्ते ताः चित्तं विषयेषु एव

आकर्षन्ति। एवं विषयेषु आकृष्यमाणं चित्तं येन मनोवृत्तिविशेषेण विषयेभ्यः अपकृष्य आत्मविषयिणि स्थिरता सम्पाद्यते तत् निदिध्यासनम् उच्यते। वेदान्तपरिभाषाकारमते निदिध्यासनं हि ब्रह्मसाक्षात्कारे साक्षात्कारणम्। तथाहि तेन उच्यते - "निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणम्" इति। वेदान्तसारे तु निदिध्यासनविषये उच्यते - "विजातीयदेहादिप्रत्ययरहित-अद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः निदिध्यासनम्" इति। यदा मनः स्थिरं भवति, अर्थात् मनसि देहादिप्रत्ययाः न आविर्भवन्ति, तदा स्थिरे शान्ते एकाग्रे मनसि अविच्छिन्नतैलधारावत् अद्वितीयब्रह्मज्ञानं सततं प्रवहते, तदेव निदिध्यासनम् उच्यते। तथाहि उच्यते

**ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत्।**
**एकतानत्वम् एतद्धि निदिध्यासनमुच्यते।। इति।**

अर्थात् श्रवणमननाभ्यां यदा अर्थः निःसन्दिग्धः भवति तदा तस्मिन् निःसन्दिग्धे वस्तुनि मनसः एकतानता हि निदिध्यासनम् उच्यते।

एवं श्रवण-मनन-निदिध्यासनानि ब्रह्मसाक्षात्कारं प्रति सहकारिकारणानि साक्षात्कारणानि वा। तथाहि उच्यते -

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येयम् एते दर्शनहेतवः।। इति।

##  पाठगतप्रश्नाः-३

३८. "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति कस्यामुपनिषदि विद्यते।

a) कठोपनिषदि b) केनोपनिषदि c) छान्दोग्योपनिषदि d) बृहदारण्यकोपनिषदि

३९. श्रवणं वै किम्?

४०. मननं वै किम्?

४१. निदिध्यासनं वै किम्?

४२. वेदान्तसिद्धान्ते तात्पर्यं वै किम्?

##  पाठसारः

अद्वैतब्रह्मप्राप्तये सहकारिसाधनानि अस्मिन् पाठे आलोचितानि। तानि हि साधनानि साधनचतुष्टयम् इति नाम्ना प्रसिद्धानि। तानि हि नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमादिषट्कसम्पत्तिः, मुमुक्षुत्वम् च इति। एतेषु नित्यानित्यवस्तुविवेकः वै ब्रह्म एव नित्यं वस्तु ततः अन्यत् अखिलं वस्तु अनित्यम् इति अवधारणम्। अस्मिन् जगति विद्यमानानि भोग्यवस्तूनि यथा अनित्यानि तथैव स्वर्गादिलोकान्तरेषु अपि विद्यमानानि भोग्यवस्तूनि अनित्यानि इति ज्ञात्वा



अनित्यविषयभोगात् विरतिः इहामुत्रफलभोगविरागः। शमः दमः उपरतिः तितिक्षा श्रद्धा समाधानम् इति षण्णां साधनानां प्राप्तिः हि शमादिषट्कसम्पत्तिः। मुमुक्षुत्वं हि मोक्षेच्छा। एतत् साधनचतुष्टयं यस्य विद्यते स एव अद्वैतवेदान्तस्य अधिकारी भवति। आसीत् नचिकेताः साधनचतुष्टयसम्पन्नः, तस्मादेव यमसकाशात् सः ब्रह्मविद्याम् अधिगतवान्। साधनचतुष्टयं विद्यते चेत् वेदान्तवाक्यानां श्रवणात् मननात् निदिध्यासनात् च आत्मतत्त्वसाक्षात्कारः भवति। श्रवणं वै "वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया"। मननं वै "शब्दावधारिते अर्थे मानान्तरविरोधशङ्कायाम् तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः"। निदिध्यासनं वै "अनादिदुर्वासनया विषयेष्वाकृष्यमाणचित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलो मानसो व्यापारः"। एवम् आत्मतत्त्वसाक्षात्कारस्य सहकारिसाधनानि साक्षात्कारणानि च अस्मिन् पाठे आलोचितानि।

##  पाठान्तप्रश्नाः

१. नित्यानित्यवस्तुविवेकं वर्णयतु।
२. साधनचतुष्टयस्य द्वितीयं साधनं वैशद्येन प्रतिपादयतु।
३. शम-दमविषये लघुटिप्पणीं लिखत।
४. उपरतिः का?
५. तात्पर्यविषये लघुटिप्पणीम् लिखत।
६. तात्पर्यग्राहकाणां लिङ्गानां परिचयः दीयताम्।
७. नचिकेतसः ब्रह्मविद्यायाम् अधिकारः किमर्थम् आसीत् इति वर्ण्यताम्।
८. श्रवणविषये लघुटिप्पणीम् लिखत।
९. मननविषये लघुटिप्पणीम् लिखत।
१०. निदिध्यासनविषये लघुटिप्पणीं लिखत।
११. शमादिषट्सु श्रद्धां समाधानं च वर्णयतु।
१२. का वै तितिक्षा?

##  पाठगतप्रश्नानाम् उत्तराणि

१. १. नित्यानित्यवस्तुविवेकः, २. इहामुत्रफलभोगविरागः, ३. शमादिषट्कसम्पत्तिः, ४. मुमुक्षुत्वं च इति चत्वारि साधनानि।
२. अद्वैतवेदान्तमते ब्रह्मैव एकं नित्यं वस्तु।
३. "नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इति।



४. ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः। सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः।। इति।

५. b) बहिरिन्द्रियाणां निग्रहः

६. "शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यः मनसः निग्रहः" इति।

७. शमः, दमः, उपरतिः, तितिक्षा, श्रद्धा, समाधानं चेति।

८. "तद्यथेह कर्मजितो लोकः क्षीयते एवम् एव अमुत्र पुण्यजितो लोकः क्षीयते" इति छान्दोग्यश्रुतिः।

९. निवर्तितानाम् इन्द्रियाणाम् मनसः च श्रवणादिसाधनव्यतिरिक्तविषयेषु शब्दादिषु प्रवृत्तिः भवति चेत् येन वृत्तिविशेषेण तेषां निग्रहः क्रियते सा उपरतिः। अथवा उपरतिः वै विहितानां कर्मणां विधिना परित्यागः इति।

१०. तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता।

११. गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा।

१२. निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्।

१३. मोक्षेच्छा।

१४. "शान्तो दान्त उपरतिस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्यति" इति श्रुतिः।

१५. वाजश्रवसस्य।

१६. d) बृहदारण्यकोपनिषदि।

१७. "श्रवणं नाम वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया" इति।

१८. "मननं नाम शब्दावधारिते अर्थे मानान्तरविरोधशङ्कायाम् तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः" इति।

१९. "निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणचित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलो मानसो व्यापारः" इति।

२०. तदितरप्रतीतिजननेच्छया अनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वम् तात्पर्यम्।

॥ इति चतुर्विंशः पाठः ॥

